जातो विशिष्टं सुखदं मधुरञ्च सुपुण्यदम् ॥४१॥
सन्देहभञ्जनञ्चैव पुराणं परिकीर्तितम् ।
इहलोके च सुखदं सुप्रदं सर्वसम्पदाम् ॥४२॥
शुभदं पुण्यदञ्चैव विघ्ननिघ्नकरं परम् ।
हरिदास्यप्रदञ्चैव परलोके प्रहर्षदम् ॥४३॥
यज्ञानामपि तीर्थानां व्रतानां तपसां तथा ।
भुवः प्रदक्षिणस्यापि फलं नास्य समानकम् ॥४४॥
चतुर्णामपि वेदानां पाठादपि वरं फलम् ।
शृणोतीदं पुराणञ्च संयतश्चेह पुत्रक ॥ ४५ ॥
गुणवन्तञ्च विद्वांसं वैष्णवं पुत्रमालभेत् ।
शृणोति दुर्भगा चेत्तु सौभाग्यं स्वामिनो लभेत् ॥४६॥
मृतवत्सा काकवन्ध्या महावन्ध्या च पापिनी ।
पुराणश्रवणाल्लभे पुत्रञ्च चिरजीविनम् ॥४७॥
अपुत्रो लभते पुत्रमभार्यो लभते प्रियाम् ।
अस्पष्टकीर्त्तिः सुयशा मूर्खो भवति पण्डितः ॥४८॥
रोगार्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥४९॥
अरण्ये प्रान्तरे भीतो दावाग्नौ मुच्यते ध्रुवम् ।
अघं कुष्ठञ्च दारिद्र्यं रोगं शोकञ्च दारुणम् ॥५०॥
पुण्यवान् श्रवणादेव नैव जानात्यपुण्यवान् ।
श्लोकार्धं श्लोकपादं वा यः शृणोति सुसंयुतः ॥५१॥
गोलक्षदानपुण्यञ्च लभते नात्र संशयः ।
चतुःखण्डं पुराणञ्च शुद्धकाले जितेन्द्रियः ॥५२॥
संकल्पितो यः शृणोति भक्त्या दत्त्वा च दक्षिणाम् ।

यद् बाल्ये यच्च कौमारे वार्धके यच्च यौवने ॥५३॥
कोटिजन्मार्जितात् पापान्मुच्यते नात्र संशयः ।
रत्ननिर्माणयानेन धृत्वा श्रीकृष्णरूपकम् ॥५४॥
नित्यं गत्वा च गोलोकं कृष्णदास्यं लभेद् ध्रुवम् ।
असंख्यब्रह्मणः पाते न भवेत्तस्य पातनम् ॥५५॥
समीपे पार्षदो भूत्वा सेवाञ्च कुरुते चिरम् ।
श्रुत्वा च ब्रह्मखण्डञ्च सुस्नातः संयतः शुचिः ॥५६॥
पायसं पिष्टकञ्चैव फलं ताम्बूलमेव च ।
भोजयित्वा वाचकञ्च तस्मै दद्यात् सुवर्णकम् ॥५७॥
चन्दनं शुक्लमाल्यञ्च सूक्ष्मवस्त्रं मनोहरम् ।
निवेद्य वासुदेवञ्च वाचकाय प्रदीयते ॥५८॥
श्रुत्वा च प्रकृतेः खण्डं सुश्रवञ्च सुधोपमम् ।
भोजयित्वा च दध्यन्नं तस्मै दद्याच्च काञ्चनम् ॥५९॥
सवत्सां सुरभीं रम्यां दद्याद्वै भक्तिपूर्वकम् ।
श्रुत्वा गणपतेः खण्डं विघ्ननाशाय संयतः ॥६०॥
स्वर्णयज्ञोपवीतञ्च श्वेताश्वच्छत्रमाल्यकम् ।
प्रदीयते वाचकाय स्वस्तिकं तिललड्डुकम् ॥६१॥
परिपक्वफलान्येव कालदेशोद्भवानि च ।
श्रीकृष्णजन्मखण्डञ्च श्रुत्वा भक्तश्च भक्तितः ॥६२॥
वाचकाय प्रदद्याच्च परं रत्नाङ्गुलीयकम् ।
सूक्ष्मवस्त्रञ्च माल्यञ्च स्वर्णकुण्डलमुत्तमम् ॥६३॥
माल्यञ्च वरदोलाञ्च सुपक्वं क्षीरमेव च ।
सर्वस्वं दक्षिणां दद्यात् स्तवनं कुरुते ध्रुवम् ॥६४॥
शतकं ब्राह्मणानाञ्च भोजयेत्परमादरम् ।

ब्राह्मणं वैष्णवं शास्त्रनिष्णातं पण्डितं वरम् ॥६५॥
कुरुते वाचकं शुद्धमन्यथा निष्फलं भवेत् ।
श्रीकृष्णविमुखान् दुष्टान्नोपदेष्टा च ब्राह्मणः ॥६६॥
श्रीकृष्णभक्तियुक्तश्च पुराणं यः शृणोति च ।
भक्तिं पुण्यञ्च लभते हन्ति पापं पुराकृतम् ॥६७॥
एतत्ते कथितं सर्वं यच्छ्रुतं गुरुवक्त्रतः ।
विदायं देहि विप्रेन्द्र यामि नारायणाश्रमम् ॥६८॥
दृष्ट्वा विप्रसमूहञ्च नमस्कर्तुं समागतः ।
कथितं ब्रह्मवैवर्तं भवतामाज्ञया परम् ॥६९॥
नमोऽस्तु ब्राह्मणेभ्यश्च कृष्णाय परमात्मने ।
शिवाय ब्रह्मणे नित्यं गणेशाय नमो नमः ॥७०॥
कायेन मनसा वाचा परं भक्त्या दिवानिशम् ।
भज सत्यं परं ब्रह्म राधेशं त्रिगुणात्परम् ॥ ७१ ॥
नमो देव्यै सरस्वत्यै पुराणगुरवे नमः ।
सर्वविघ्नविनाशिन्यै दुर्गादेव्यै नमो नमः ॥७२॥
युष्माकं पादपद्मानि दृष्ट्वा पुण्यानि शौनक ।
अद्य सिद्धाश्रमं यामि यत्र देवो गणेश्वरः ॥७३॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे सूतशौनकसंवादे एकत्रिंशाधिकशततमोऽध्यायः ।

---

समाप्तोऽयं ग्रन्थः ।